वेङ्कटेश प्रातःस्मरणं श्लोकत्रयम्

प्रातः स्मरामि रमया सह वेङ्कटेशं
मन्दस्मितं मुखसरोरुहकान्तिरम्यम् ।
माणिक्यकान्तिविलसन्मकुटोर्ध्वपुण्ड्रं
पद्माक्षलक्ष्यमणिकुण्डलमण्डिताङ्गम् ॥ १॥

प्रातर्भजामि कररम्यसुशङ्खचक्रं
भक्ताभयप्रदकटिस्थलदत्तपाणिम् ।
श्रीवत्सकौस्तुभलसन्मणिभूषणोद्यत्
पीताम्बरं मदनकोटिसुमोहनाङ्गम् ॥ २॥

प्रातर्नमामि परमाद्य पदारविन्दं
आनन्दसान्द्रनिलयं मणिनूपुराढ्यम् ।
एतत्समस्तजगतामिति दर्शयन्तं
वैकुण्ठमत्र भजतां करपल्लवेन ॥ ३॥

श्लोकत्रयस्य पठनं दिनपूर्वकाले
दुस्स्वप्नदुश्शकुनदुर्भयपापशान्त्यै ।
नित्यं करोति मतिमान्परमात्मरूपं
श्रीवेङ्कटेशनिलयं व्रजति स्म योऽसौ ॥
श्रीः घनगुरवे नमः ।
॥ इति वेङ्कटेश प्रातःस्मरणं श्लोकत्रयम् ॥